THE

# KASHI SANSKRIT SERIES

( *HARIDAS SANSKRIT GRANTHAMÂLÂ* )

NO. 37

( Vyakaran Section No. 6 )



240
2760

THE

# KASHIKA

( BEING A COMMENTARY ON THE SUTRAS OF PANINI )

*Edited with Notes by*

VYĀKARANĀCHĀRYA-MĪMĀṂSĀ TĪRTHA

**Pandit Ananta Sastri Phadake**

*Professor, Govt. Sanskrit College, Benares.*



PRINTED PUBLISHED & SOLD BY

JAI KRISHNADAS-HARIDAS GUPTA,

*The Chowkhamba Sanskrit Series office, Vidya Vilas Press,*

*North of Gopalmandir, Benares City.*

1931.

हरिदाससंस्कृतग्रन्थमालासमाख्य-
काशीसंस्कृतसीरिज़पुस्तकमालायाः
३७
व्याकरणविभागे (६) षष्ठं पुष्पम् ।

# काशिका

श्री पाणिनिमुनिविरचितव्याकरणसूत्राणां वृत्तिः ।

विद्वद्वर-वामन जयादित्यविनिर्मिता ।

काशिस्थराजकीयप्रधानसंस्कृतपाठशालीयपुराणेतिहासाध्यापकेन व्याकरणाचार्य-
मीमांसातीर्थेन फडके इत्युपनामक-अनन्तशास्त्रिणा
परिष्कृत्य संशोधिता ।

प्रकाशक—
जयकृष्णदास हरिदास गुप्तः-
चौखम्बा संस्कृत सीरिज़ आफिस,
विद्याविलास प्रेस, गोपालमन्दिर के उत्तर फाटक,
बनारस सिटी ।



१९८७

श्री १०८ भैरवाय नमः।

# किञ्चित्प्रास्ताविकम्।

विदितमेतद्विपश्चिदपश्चिमैर्विद्विदग्रेसरैः सर्वथा, यत् सर्वव्यवहारकारणं भाषेति। सा च "भाष व्यक्तायां वाचि" इतिस्मरणात्स्पष्टा वर्णघटिता च। यद्यपि व्यवहारकारणत्वमङ्गुल्यादेरपि संभवति तथापि न तत्सर्वथा पर्याप्तमशक्यं च सर्वदा सर्वैरनुष्ठातुम्। कदाचित्सचक्षुः पश्येदङ्गुल्यादिकं, प्रज्ञाचक्षुषा त्वशक्यं तत्सर्वथेतिसुस्पष्टं व्यवहारविदाम्। सापि यदा भाषा स्पष्टवर्णघटिता तदैव ज्ञानोत्पादिका व्यवहाराय च समर्था भवति, नोचेत्पशुनिर्विशेषमेव सर्वं व्यवहारादिकं मनुष्याणां भवेत्। अयमप्येको विशेषो मनुष्याणां यः सुव्यक्तया वाचा व्यवहारः।

सैषा वाणी कदोत्पन्नेति जिज्ञासायां किलोत्तरमेतत्पुरस्फुरति मनुष्योत्पत्त्यनन्तरमिति। कदा च मानवोत्पत्तिरिति विचिकित्सायां सृष्ट्युत्पत्त्यनन्तरमित्युत्तरं वाच्यम। सृष्ट्युत्पत्तिः कदेतिचेत्प्रलयानन्तरमिति वक्तव्यम्। कदा प्रलय इति विचारणायां सृष्टेरनन्तरमित्युत्तरमायाति। तस्मिन्काल एषा सृष्टिरेतादृश्यन्यादृशी वेतिप्रश्नस्योत्तरमेतादृश्यस्तीत्येवायाति। अन्यादृश्यस्तीति कथने प्रमाणाभावाद्, दृश्यानुसार्या एव कल्पनाया उचितत्वात्।

एतावता विचारेणेदमेव प्रसिद्ध्यति—नासीदेतादृशः कालो यस्मिन्सर्वथा सर्वशब्दाभाव इति। कदाचित्प्रलये सर्वपदार्थाभावकाले स्यात्सर्वशब्दाभाव इत्यपि वक्तुमशक्यम्। अद्य यावत् खण्डप्रलयस्यैव भूतत्वात्। एकस्मिन्देशे शब्दप्रयोज्यज्ञानाभावेऽपि तद्भिन्ने देशे तस्य विद्यमानत्वात्। इयमेव कल्पना सम्मताऽध्वरमीमांसकानां पौराणिकादीनाम्। प्रपञ्चितं चतन्महाताऽऽटोपेन शबरस्वामिभिर्मीमांसाभाष्ये सम्बन्धाक्षेपप्रसङ्गेन "अकृतसम्बन्धाः केचन शब्दा वृद्धव्यवहारसिद्धा अभ्युपगन्तव्याः" इत्यादिकम्। मत्स्यपुराणेऽपि सदेवनक्षत्रजगत्प्रलयेऽपि वेदादिकं स्थास्यत्येवेत्यादिकम—

> एकः स्थास्यति देवेषु दग्धेष्वपि परंतप।
> सोमसूर्यावहं ब्रह्मा चतुर्लोकसमन्वितः॥
> नर्मदा च नदी पुण्या मार्कण्डेयो महानृषिः।
> भवो वेदाः पुराणाश्च विद्याभिः सर्वतो वृतम्।
> त्वया सार्धमिदं विश्वं स्थास्यत्यन्तरसंक्षये।
> वेदान् प्रवर्तयिष्यामि त्वत्सर्गादौ महीपते॥

इत्यादिना प्रबन्धेन सुतरां स्पष्टम्। एतदेव श्रीमत्या भगवत्या "वाचा विरूपनित्यया" इत्याकारिकया श्रुत्यादि प्रदर्शितम्। कदाचिन्महाप्रलयस्याङ्गीकारेऽपीश्वरभिन्नस्यैव सर्वस्यानित्यतया तदानीं तस्य महापुरुषस्येश्वरस्य विद्यमानत्वेन तत्रापि शब्दस्य कल्पयितुं शक्यत्वात्। अत एव हिरण्यगर्भोपदेशस्य "यो वै

ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै" इतिश्रुत्युक्तस्योपपत्तिर्भवति। स चोपदेशो यथानुपूर्विकस्या एव श्रुतेर्न भिन्नानुपूर्वीकस्याः। "धाता यथापूर्वमकल्पयत्"इतिश्रुतेः। एतावता यादृश्याऽऽनुपूर्व्या प्रादुर्भूतानां वेदानां नित्यत्वे सिद्धे सुतरां शब्दानां नित्यत्वं सिद्धमेव। यद्यपि वर्णनित्यत्वांगीकारेऽपि आनुपूर्व्या अपि नित्यत्वं न स्वीकुर्वन्ति केचनेति सुस्पष्टमेतत् "शास्त्रयोनित्वात्" इतिसूत्रीयभामत्यां "यैरपि तावत् वर्णानां नित्यत्वमास्थिषत तैरपि पदवाक्यादीनामनित्यत्वमभ्युपेयम्। आनुपूर्वीभेदवन्तो हि वर्णाः पदम्। पदानि चानुपूर्वीभेदवन्ति वाक्यम्। व्यक्तिधर्मश्चानुपूर्वी न वर्णधर्मः। वर्णानां नित्यानां विभूनां च कालतो देशतो वा पौर्वापर्यायोगात्। व्यक्तिश्चानित्येति कथं तदुपगृहीतानां वर्णानां नित्यानामपि पदता नित्या" इत्यादिप्रघट्टकेन भामतीविदाम्।

नैयायिकास्तु वर्णानामप्यनित्यत्वं "उत्पन्नो गकारो नष्टो गकार इत्यादिप्रत्यभिज्ञया "शब्दोऽनित्यः कार्यत्वाद् घटवदित्याद्यनुमानेन तथा जैना अपि अनेकान्तवादिनः कथञ्चिन् नित्यत्वं कथञ्चिच्चानित्यत्वं च स्वीकुर्वन्ति। विस्तारितवन्तस्त एतन्मतं प्रमेयकमलमार्तण्डेऽष्टसाहस्त्र्यां श्लोकवार्तिके च। भवतु यथाभिमतं तेषाम्। मीमांसकपौराणिकसाङ्ख्यपातञ्जलवैयाकरणादिकानां त्वयमेव पन्थाः। सर्वथानित्यत्वानित्यत्ववादिनां विरोधेऽपि व्यवहारकारणत्वं नापगच्छति।

अथ भाषाशरीरघटकीभूताः शब्दाः किमनादिकालतोऽनुवर्तन्त उत शब्दमूलभूता धातवः, शब्दाश्च तज्जन्याः, इतिविचारे मूलभूताः सर्वशब्दानां धातव इति केचन। उक्तं च भाष्ये "सर्वं हि नाम धातुजमाह शकटस्य च तोक" इत्यादिना। भगवता यास्केनापि नैरुक्ते "तत्र नामान्याख्यातजानीति शाकटायनो नैरुक्तसमयश्च न सर्वाणीतिगार्ग्यो वैयाकरणानां चैके" इत्यादिप्रघट्टकेन स्पष्टीकृतम्। पाणिनिप्रभृतीनां तु मतं सन्ति शब्दा उभयरूपा धातुमूलाः सिद्धरूपाश्चेति, सुविदितं "अर्थवदधातुरप्रत्ययः प्रातिपदिकम्" "कृत्तद्धितसमासाश्च" इति सूत्रद्वयप्रणयनकर्तृपाणिन्यभिप्रायविदां वैयाकरणानाम्।

अथ के धातव कथं वोत्पत्तिरेषामिति विचारे ध्वन्यनुकरणरूपा मूलभूता एव केचन इति प्रतिभाति। अन्ये च मूलभूतानां परिणामरूपा एव। अथवा ध्वन्युकरणमेकेनकरूपेणान्येनान्यरूपेण परेणाभयतोऽपि भिन्नरूपेण। तथाहि "चमु छमु जमु झमु अदने" इत्यादिधातुपाठे पठितम्। तत्र भोजनसमये चवर्णकाले जायमानस्य ध्वनेरनुकरणं केनचित् "चम्" इति कृतम् परेण "छम्" इति; अन्येन "जम्" इति, अपरेण "झम्" इति, तत एते धातवः चतुर्धा संजाताः। तथा पर्प रफ रफि अर्ब पर्ब लर्ब बर्ब मर्ब कर्ब खर्ब गर्ब शर्ब षर्ब चर्ब" इत्यादिष्वपि तथैव द्रष्टव्यम्। विशेषतो विवेचयामश्चैतद्वयं प्राचीनभाषाविज्ञानसंज्ञके प्रबन्धे।

एतेन यदाधुनिकमतं सर्वभाषामूलभूता काचिदेकाऽऽसीत् भाषाऽधुना सा सर्वत्र लुप्तापि, पितृ–फादर मातृ–मदर इत्यादि सर्वभाषागतसमानशब्दप्रयोगेणा-

नुमीयते। एकभाषा च एकदेशस्थितानामेव भवति तदर्थं च सर्वदेशीयपुरुषमूलपुरुषाणामेकस्मिन्देशे स्थितिरावश्यिकी। एकस्मिन्देशे निवासेऽपि परस्परसम्बन्धेन विनैकभाषात्वमशक्यं तदर्थं परस्परसम्बन्धकल्पनमावश्यकमित्यादिकं नवीनमतं सर्वमपि विचारास्पदमेव भवति। ध्वन्यनुकरणसाधनानां ध्वन्यनुकरणानां च सर्वत्र समानत्वं प्रायो दृश्यते। मातृपित्रादिशब्दानां बालकप्राथमिकोच्चारितानामुच्चारणसुलभत्वेन समानत्वात्।

अथ व्याकरणस्य कश्चोपयोग इतिविचारणायां भगवता वार्तिककारेण "रक्षोहागमलघ्वसन्देहाः प्रयोजनम्" इत्यादिना प्रयोजनं प्रदर्शितम्। भगवता भाष्यकारेण चैतानि व्याख्यायापराणि बहूनि प्रयोजनानि दर्शितानि। ऊहागमयोः केवलवेदैकविषयत्वेऽपि रक्षालघ्वसन्देहादीनां सकलभाषाव्याकरणसमानत्वम्। इमान्येन सर्वत्रानुगतप्रयोजनानि। स्पष्टीकुर्वन्ति चाधुनिकाः "व्याकरणाभावे हि मनुष्याणां मनुष्यत्वमेवापगच्छेत्। तथाहि—यस्य समाजस्य प्राचीनग्रन्थधनं न स्यात् स च मृतकल्प एव। न कदाचिदपि तस्योन्नतेः प्रत्याशा। प्राचीनवीरोदारपुरुषचरितग्रन्थाश्च प्राचीनभाषायामेव भवेयुः। व्यतीतेषु पञ्चाशद्वर्षेषु प्रायः भाषायाः भिन्नरूपत्वं किञ्चिदंशेन भवति। यदि प्रचलितभाषायाः प्राचीनभाषायाश्च संयोजकं व्याकरणादिकं न स्यादशक्यमेव प्राचीनभाषाविज्ञानं तद्वर्णितवीरोदारसत्पुरुषाणां विज्ञानं सुतरां सत्पुरुषाचरणानुचरणम्। तस्माद्व्याकरणमेव सार्वकालिकभाषासंयोजकं तस्थज्ञानप्रापकमुभयतटव्यवहारसाधकसेतुरिवावश्यमङ्गीकरणीयम्। व्याकरणाभावे हि सर्वथाऽशक्यमेव वेदादिप्राचीनग्रन्थविज्ञानम्। ज्ञानाभावे च प्राचीनवेदादिग्रन्थरक्षणं सुतरामशक्यम्। तन्नाशे चोन्नत्यभावः। ऊन्नतेरभावे च पशुतुल्यत्वम्। पशुतुल्यत्वे मनुष्यत्वहानिः। तस्माद् व्याकरणमेव मनुष्याणां मनुष्यत्वप्रापकं तेषां ग्रन्थधनरक्षकं च।

अथ व्याकरणपदार्थः कः? इति विचारणायां भगवता वार्त्तिककारेण "लक्ष्यलक्षणे व्याकरणम्" इति, भाष्यकारेण च "लक्ष्यं च लक्षणं चैतत्समुदितं व्याकरणं भवति। किं पुनर्लक्ष्यं लक्षणं च, शब्दा लक्ष्यः, सूत्रं लक्षणम्" इत्यादिग्रघट्टकेनोक्तम्। अयमभिप्रायः। "व्याकरणस्य सूत्रम्" इति सार्वजनीनप्रयोगेण सूत्रादन्यत्किमपि व्याकरणपदवाच्यमपेक्षितम्। तच्च शब्दा एव। केवलशब्दरूपव्याकरणस्वीकारे व्याकरणेत्याकारकशब्दे संजातस्य ल्युट्प्रत्ययस्यानुपपत्तिः। करणाधिकरणयोश्च हि ल्युड्विधीयते। व्याक्रियन्ते शब्दा अनेनेति व्युत्पत्त्या सूत्रमपि व्याकरणशब्दवाच्यं वक्तव्यम्। एवं चोभयमपि व्याकरणशब्दवाच्यं फलति।

अथ व्याकरणं कथं कर्त्तव्यमितिविचारणायां भगवता भाष्यकारेण प्रदर्शित एव पन्था अनुसर्तव्यो भवति। स च मार्गः "शब्दानुशासनमिदानीं कर्तव्यम्। तत्कथं कर्तव्यम्?। किं शब्दोपदेशः कर्तव्य आहोस्विदपशब्दोपदेश आहोस्विदुभयोपदेश इति। कि पुनरत्र ज्यायः। लघुत्वाच्छब्दोपदेश." इदमाकूतम्। व्याकरणेन हि शब्दसाधुत्वबोधनं क्रियते तच्च बोधनं कोषादिवत् एते शब्दा एतदर्थकाः

साधवश्चेत्यादिप्रकारेण कर्तव्यमुतैतेऽसाधवः तद्भिन्नाः साधवः शब्दा इत्यादिरूपेण कर्तव्यमिति विचार इदमेव सम्यक् प्रतिभाति साधुशब्दोपदेश एव कर्तव्य इति । वस्तुस्वरूपलक्षणेन यथा वस्तुज्ञानं सम्यक् सुशकं च सर्वेषां न तथा भेदघटितातद्व्यावृत्तिरूपेण लक्षणेन । यथा का नाम गौरिति पृष्टे शृङ्गित्वे सति सास्नादिमत्वरूपलक्षणेन यथा सम्यग् ज्ञानं भवति न तथा गवितरभिन्नेत्याकारकलक्षणेन । स्पष्टं चैतत् अतद्व्यावृत्तिरूपलक्षणखण्डनप्रसङ्गेन जैनमतप्रतिपादकाष्टसाहस्रीग्रन्थे ।

एवं च साधुशब्दोपदेश एव कर्तव्य इत्येवायाति । स च कथं कर्त्तव्यः ? । किमेतेषां शब्दानामेतासु विभक्तिषु एतानि रूपाणि भवन्त्याकारक, उत उत्सर्गापवादन्यायेनेतिविचारे भाष्यकारप्रदत्तमेवोत्तरं सम्यक् प्रतिभाति । तच्चेदं—"अनभ्युपाय एषः शब्दानां प्रतिपत्तौ प्रतिपदपाठः । एवं हि श्रूयते । बृहस्पतिरिन्द्राय दिव्यं वर्षसहस्रं प्रतिपदोक्तानां शब्दानां शब्दपारायणं प्रोवाच नान्तं जगाम । बृहस्पतिश्च प्रवक्ता इन्द्रश्चाध्येता दिव्यं वर्षसहस्रमध्ययनकालः न चान्तं जगाम । किं पुनरद्यत्वे यः सर्वथा चिरं जीवति स वर्षशतं जीवति । चतुर्भिश्च प्रकारैर्विद्योपयुक्ता भवति । आगमकालेन स्वाध्यायकालेन प्रवचनकालेन व्यवहारकालेनेति । तत्र चास्यागमकालेनैवायुः कृत्स्नं पर्युपयुक्तं स्यात् । तस्मादनभ्युपायः शब्दानां प्रतिपत्तौ प्रतिपदपाठः । तस्मादुत्सर्गापवादरूपेणैत्र शास्त्रप्रणयनं कर्तव्यम्" इति । उत्सर्गो नाम सामान्यशास्त्रमपवादो नाम तस्य संकोचको विशेषः । एतदुभयरूपेणैव शास्त्रकरणे लाघवं लोकादरणीयं च भवति । निर्दिष्टसर्वगुणोपेतं किल महर्षेः पाणिनेर्व्याकरणम् ।

अथ पाणिनेः पूर्वं व्याकरणमासीत् तदुपाणिनिनैव प्रथमतः कृतमितितिविचारे पाणिनिसूत्रोक्तानेकर्षिनामश्रवणेन पाणिनिपूर्वकालेऽनेकैर्वैयाकरणैर्व्याकरणशास्त्रस्य विरचनं कृतमिति ज्ञायते । वेदेष्वपि व्याकरणमूलं दरीदृश्यते ।

"कस्मात्तं होतेत्याचक्षत इति यद्वाव स तत्र यथा भाजनं देवता अमुमावहामुमावहेत्यावाहयति तदेव होतुर्होतृत्वम्" । ( ए० ब्रा० )

"ते देवा इन्द्रमब्रुवन इमां नो वाचं व्याकुरु" ( तै० सं० )

"अथ को धातुः किं प्रातिपादिकम्" इत्यादिकम । ( अथ० वे० )

श्रीमता पाणिनिना स्वकीयव्याकरणे बहूनां वैयाकरणानां मतानि तत्तन्नामपूर्वकमुक्तानि परन्तु तेषां ग्रन्था नोपलभ्यन्तेऽधुना । शाकटायनव्याकरणमेकं प्रसिद्धं मुद्रितमधुनोपलभ्यते परन्तु तत्तेनैव कृतमन्येन वा कृत्वा तस्य नाम्ना प्रकाशितमित्यत्र सन्देह एव । पाणिनेरनन्तरं जातानि बहूनि व्याकरणानि पाणिनिप्रदर्शितमार्गमनुसरन्ति मुद्रितान्यमुद्रितान्युपलभ्यन्ते प्रसिद्धश्चायं श्लोकः—

इन्द्रश्चन्द्रः काशकृत्स्नापिशली शाकटायनः ।
पाणिन्यमरजैनेन्द्रा जयन्त्यष्टादिशाब्दिकाः ॥

अपराण्यपि बहूनि व्याकरणानि सारस्वतमुग्धबोधादीनि प्रसिद्धानि, परन्तु पाणिनिव्याकरणस्य स्थानं व्याकरणमालायां मध्यमेरुरिव प्रधानं, ध्रुव इवाचलमधु-

नापि वरीवर्ति। अस्य मुख्यं कारणमनेन मुनिना यथा लौकिकशब्दसाधुत्वबोधने प्रयतितं तथाऽलौकिकशब्दबोधनेऽपि। "अत एव भाष्यकारेण पस्पशान्हिके "व्याकरणं केषां शब्दानां ? वैदिकानां लौकिकानां च" इत्युक्तम्। तस्यैवोपायस्योपादेयत्वं लोके संभवति येन सर्वमपि कार्यं सुखेन लघुना समयेन च संपादनीयं भवति।

पाणिनिरयं भगवान् मुनिः कदा प्रादुर्भूतः कतमं च कुलं स्वजन्मना मण्डयामासेत्यादिकमैतिह्यमन्यतोऽवसेयमैतिह्यरसिकैः। पाणिनिव्याकरणस्योपरि बहवो ग्रन्थाः प्राचीना नूतनाश्च विद्यन्ते तत्र कर्तुमकर्तुमन्यथाकर्तुं समर्थं भगवता महामुनिना पतञ्जलिना रचितं महाभाष्यमेव। यस्य विलक्षणवैशिष्ट्यं दृष्ट्वैव लोके भाष्यमपि महाभाष्यत्वेन प्रसिद्धम्। अन्येऽपि बहवो ग्रन्था कौमुद्यादिका विद्यन्ते परन्तु सूत्रार्थबोधनाय वामनकृतकाशिका यथा स्वव्याख्यार्थमनुसरन्त्युपकरोति विद्यार्थिनो न तथाऽन्ये केचन ग्रन्था इत्युक्तिरतिशयोक्तिपदं न भजेत। अत्र यथा सूत्रपदकृत्यमुदाहरणप्रत्युदाहरणप्रदर्शनं न तथाऽन्यत्र। यदि स्यादन्यत्र तदप्येतन्प्रदर्शितप्रदर्शनमेव।

अथास्याः काशिकायाः प्रणेता जयादित्यवामनः, किं ? जयादित्योऽन्यः वामनश्चान्यः, उत जयादित्यवामन एक एव इति विचारणायां जयादित्यो वामनश्च द्वावेतौ ग्रन्थकारौ। द्वाभ्यां संपादितैषा काशिका। अत्र प्रमाणं प्राचीनग्रन्थकृतां लेख एव। "नास्ति विरोधः। भिन्नकर्तृकत्वात्। इदं हि जयादित्यस्य वचनं। तत् पुनर्वामनस्य"। "ग्लाजिस्थश्चेत्यत्र जयादित्यवृत्तौ ग्रन्थः श्रुकः कितीत्यत्रापि। वामनस्य त्वेतत्सर्वमनभिमतम्"। "एतच्च सर्वं जयादित्यमतेनोक्तम्। वामनस्तु मन्यते जातिशब्देभ्योपि भवत्येव" इत्यादिका जिनेन्द्रभट्टोजिदीक्षितप्रभृतीनामुल्लेखा एव। केऽध्यायाः वामनेन रचिता के च जयादित्येनेतिविचारणायां शब्दरत्नकारेणोक्तम्। "प्रथमद्वितीयपञ्चमषष्ठा जयादित्यकृतवृत्तयः। इतरे वामनकृतवृत्तय इत्यभियुक्ता" इति।

कश्चायं वामन इति जिज्ञासायां काशिकाप्रणेता वामनः काव्यालङ्कारसूत्रप्रणेतृवामनतो भिन्न एवेत्यसन्दिग्धमुभयग्रन्थावलोकनेन भवति। महाराष्ट्रदेशीयराज्यसंस्थापकशिवाजिनामकनृपतिसमकालीनपण्डितवामनतोऽपि भिन्न एव काशिकाकर्ताऽप्ययम्। स चायं कदोत्पन्न इति जिज्ञासायां भारत–रामायण–भारविप्रभृतिग्रन्थकारवचनोल्लेखेन तदनन्तरसम्भवीति निश्चीयते।

वामनस्तु जयादित्यानन्तरकाले संजात इति निश्चितमितिहासविद्भिस्तस्मात्तस्य चायं कालः (इ० स० ६७०) भवितुमर्हति। जयादित्यस्य (इ०स० ६६१) अयं कालो भवितुमर्हति।

स चायं कस्मिन्कुले संजात इति विचारणायामयं नास्तिकः जैनकुले संजातो यतोऽयं "संमाननोत्संजन" इति सूत्रोदाहरणे "नयते चार्वी लोकायते" इत्युदाजहार, मङ्गलमपि तादृशं कृतवान् यथामरकोष इत्यादि केषांचिन्मतम्। अन्ये च केवलमुदाहरणदानेन वा संदिग्धमङ्गलाचरणकरणेन वा जैनत्वं न वक्तुं शक्यम्।

प्रत्युत मङ्गलाचरणकर्तृत्वमेव तस्यास्तिकत्वे प्रमाणं भवितुमर्हति। जैनवृद्धिकाले जैन-बहुले जैनराजकीये देशे तस्य संजातत्वेनोदाहरणस्य जैनैरप्युपादेयत्वं भवत्वितीच्छ-या संदिग्धमङ्गलाचरणस्य च करणमास्तिकत्वेऽपि तस्य सम्यक्तया कल्पयितुं शक्य-ते। तस्मादयमास्तिक एव ब्राह्मण इत्यपि केषां चिन्मतम्। एतस्य तत्वं ऐतिह्यविद्भि-रालोचनीयम्। अस्याः काशिकायाः मुद्रणं कर्तुकामैः चौखम्बासंस्कृतसीरिजेत्यादि-ग्रन्थमालासंपादकहरिदासपुत्रजयकृष्णदासगुप्तैः प्रेरितोऽहं तथागुरूणां विद्यासाग-राणां महामहोपाध्यायपदभूषकाणां पर्वतीयनित्यानन्दपन्तमहोदयानां तथागुरूणां व्याकरणाचार्याणां काशिकराजकीयपाठशालायां व्याकरणादिसर्वशास्त्राध्यापकानां मोकाटेइत्युपनामकानां गणपतिशास्त्रिणामाज्ञामवाप्य यथामति काशिकायाः संशोधनं शुद्धपाठसंयोजनं तथा स्थलविशेषेषु टिप्पणीसंयोजनं चाकरवम्। अत्रम-महृष्टिदोषतो मुद्राक्षरयोजकप्रमादतो वा जातान्यशुद्धानि हंसक्षीरन्यायेनापास्यात्र-त्यान् गुणानास्वादयन्तु गुणैकपक्षपातिनो विद्वांस इति प्रार्थयति विदुषामनुचरः—

फडके इत्युपनामकगोपालतनुजोऽनन्तशास्त्री
व्याकरणाचार्यो मीमांसातीर्थश्च।
काशिकराजकीपाठशालीयपुराणेतिहासाद्यध्यापकः।

चैत्र शु० ७
संवत् १९८८

श्रीगणेशाय नमः ।

## पाणिनीयसूत्रवृत्तिः-

# काशिका ।

वृत्तौ(१) भाष्ये(२) तथा धातुनामपारायणादिषु(३) ।
विप्रकीर्णस्य तन्त्रस्य क्रियते सारसंग्रहः ॥ १ ॥
(४)इष्ट्युपसंख्यानवती शुद्धगणा विवृतगूढसूत्रार्था ।
व्युत्पन्नरूपसिद्धिर्वृत्तिरियं काशिका नाम ॥ २ ॥
व्याकरणस्य शरीरं परिनिष्ठितशास्त्रकार्य(५)मेतावत् ।
शिष्टः परिकरबन्धः क्रियतेऽस्य ग्रन्थकारेण ॥ ३ ॥

केषां शब्दानाम् ? । लौकिकानां वैदिकानां च । कथमनुशासनम् ? । प्रकृत्यादिविभाग-कल्पनया सामान्यविशेषवता लक्षणेन । अथ किमर्थो वर्णानामुपदेशः ? । प्रत्याहारार्थः । प्रत्याहारो लाघवेन शास्त्रप्रवृत्त्यर्थः ।

अ इ उ ण् ॥ १ ॥

अ इ उ इत्यनेन क्रमेण वर्णानुपदिश्यान्ते णकारमितं करोति प्रत्याहारार्थम् । तस्य ग्रहणं भवत्येकेन "उरण् रपरः" (अ०सू०१।१।५१) इत्यकारेण । ह्रस्वमवर्णं प्रयोगे संवृतम् । दीर्घप्लुतयोस्तु विवृतत्वम् । तेषां सावर्ण्यप्रसिद्ध्यर्थमकार इह शास्त्रे विवृतः प्रतिज्ञायते । तस्य प्रयोगार्थम् "अ अ इति" (अ०सू०८।४।६६) शास्त्रान्ते प्रत्यापत्तिः करिष्यते ।

ऋ ऌ क् ॥ २ ॥

ऋ ऌ इत्येतौ वर्णावुपदिश्य पूर्वांश्चान्ते ककारमितं करोति प्रत्याहारार्थम् । तस्य ग्रहणं भवति त्रिभिः । "अकः सवर्णे दीर्घः" (अ०सू०६।१।१०१) इत्यकारेण । "इको गुणवृद्धी" (अ०सू०१।१।३) इतीकारेण । "उगितश्च" (अ०सू०४।१।६) इत्युकारेण । अकारादयो वर्णाः प्रचुरप्रयोगविषयास्तेषां सुज्ञानमुपदेशे प्रयोजनम् । ऌकारस्तु क्लृपिस्थ एव प्रयुज्यते, क्लृपेश्च "पूर्वत्रासिद्धम्" (अ०सू०८।२।१) इति लत्वमसिद्धम् । तस्यासिद्धत्वाद् ऋकार एव

---

( १ ) सूत्रार्थप्रधानो ग्रन्थो वृत्तिः । सा च कुणिप्रभृतिभिर्विरचिता ।

( २ ) आक्षेपसमाधानपरो ग्रन्थो भाष्यम् । तच्च पतञ्जलिप्रणीतम् ।

( ३ ) धातुनामपारायणादिष्विति । यत्र धातुप्रक्रिया तद्धातुपारायणम् । यत्र गणशब्दानां निर्वचनं तन्नामपारायणम् । आदिशब्देन शिक्षोणादिफिट्सूत्रादेर्ग्रहणम् ।

( ४ ) सारसङ्ग्रहप्रकारमेव दर्शयति—इष्टीति । सूत्रेणासंगृहीतं लक्ष्यं येन सगृह्यते तदुपलक्षणमिष्ट्युपसङ्ख्यानग्रहणम् । तेन वक्तव्यादीनामपि ग्रहणम् । तयुक्ता । शुद्धगणेति । गणशुद्धियुक्ता । तच्छुद्धिप्रकारश्च "लोहितादिडाज्भ्यः क्यष्वचनं भृशादिष्वितराणि" इत्यादिना मूले प्रदर्शित एव । व्युत्पन्नरूपसिद्धिरिति । उदाहृतशब्दरूपं यथासिध्यति तथा व्युत्पत्तिप्रदर्शिकेति ।

( ५ ) "कृत्य" इतिपाठान्तरम् ।

अच्कार्याणि भविष्यन्तीति किमर्थं लृकार उपदिश्यते लृत्वविधानाद्यानि पराण्यच्कार्याणि तानि लृकारे यथा स्युरिति । कानि पुनस्तानि । प्लुतः, स्वरितो, द्विर्वचनम् । क्लृ३प्तशिखः प्रक्लृप्तवानिति । यच्चाशक्तिजमसाधुशब्दरूपं तदनुकरणस्यापि साधुत्वमिष्यते । तत्स्थस्यापि लृकारस्याच्कार्यप्रतिपत्त्यर्थं लृकारोपदेशः क्रियते । 'ऋतक' इति प्रयोक्तव्ये शक्तिवैकल्यात् कुमारी 'लृतक' इति प्रयुङ्क्ते, तदन्योऽनुकरोति कुमार्य्लृतक इत्याह इति ।

## ए ओ ङ् ॥ ३ ॥

ए ओ इत्येतौ वर्णावुपदिश्य अन्ते ङकारमितं करोति प्रत्याहारार्थम् । तस्य ग्रहणं भवत्येकेन(१) । "एङि पररूपम्" (अ०सू०६।१।९४) इत्यकारेण ।

## ऐ औ च् ॥ ४ ॥

ऐ औ इत्येतौ वर्णावुपदिश्य पूर्वांश्चान्ते चकारमितं करोति प्रत्याहारार्थम् । तस्य ग्रहणं भवति चतुर्भिः । "अचः परस्मिन् पूर्वविधौ" (अ०सू०१।१।५७) इत्यकारेण । "इच एकाचोऽम् प्रत्ययवच्च" (अ०सू०६।३।६८) इति इकारेण । "एचोऽयवायावः" (अ०सू०६।१।७८) इति एकारेण । "वृद्धिरादैच्" (अ०सू०१।१।१) इति ऐकारेण ।

प्रत्याहारेऽनुबन्धानां कथमज्ग्रहणेषु न ।
आचारादप्रधानत्वाल्लोपश्च बलवत्तरः ॥

वर्णेषु ये वर्णैकदेशा वर्णान्तरसमानाकृतयस्तेषु तत्कार्यं न भवति तच्छायानुकारिणो हि ते, न पुनस्त एव । पृथक्प्रयत्ननिर्वर्त्यं हि वर्णमिच्छन्त्याचार्याः । लुङ्धिलादेशविनामेषु ऋकारे प्रतिविधातव्यम्* । लुङ्धौ ऋकारग्रहणम् । आनृधतुः, आनृधुः । ल्यादेशे ऋकारग्रहणम् । क्लृप्तः, क्लृप्तवान् । विनामे ऋकारग्रहणम् । कर्तृणाम् ।

## ह य व र ट् ॥ ५ ॥

ह य व र इत्येतान् वर्णानुपदिश्य पूर्वांश्चान्ते टकारमितं करोति प्रत्याहारार्थम् । तस्य ग्रहणं भवत्येकेन । "शश्छोऽटि" (अ०सू०८।४।६३) इत्यकारेण । अयं रेफो यकारात्पर उपदिष्टः । तस्य यर्ग्रहणेन ययग्रहणेन च ग्रहणे सति स्वर्नयति प्रातर्नयतीत्यत्र "यरो ऽनुनासिकेऽनुनासिको वा" (अ०सू०८।४।४५) इति अनुनासिकः प्राप्नोति । मद्रह्रदो भद्रह्रद इत्यत्र द्विर्वचनं प्राप्नोति "अचो रहाभ्यां द्वे" (अ०सू०८।४।४६) इति । कुण्डं रथेन वनं रथेनेत्यत्र "अनुस्वारस्य ययि परसवर्णः" (अ०सू०८।४।५८) इति परसवर्णः प्राप्नोति । नैष दोषः । आकृतौ पदार्थे समुदाये 'सकृल्लक्ष्ये लक्षणं प्रवर्तते' इत्येतस्मिन् दर्शने "यरो ऽनुनासिकेऽनुनासिको वा" (अ०सू०८।४।४५) अन्तरतमो भवतीत्येवमेतत्प्रवर्त्तते । तदनेन गकारादीनां ङकारादयो ये यथा स्वस्थानतो गुणतश्चान्तरतमास्ते सर्वे विहिताः । ये तु न स्थानतो नापि गुणतः स्थानमात्रेण गुणमात्रेण वा अन्तरतमास्ते सर्वे निवर्तिता इति स्थानमात्रान्तरतमो रेफस्य णकारो न भवति । द्विर्वचनेऽपि रेफस्य यरन्तर्भावे सति यत्कार्यत्वं प्राप्तं तत्साक्षाच्छिष्टेन निमित्तभावेन बाध्यत इति न द्विरुच्यते रेफः । "अनुस्वारस्य ययि परसवर्णः" (अ०सू०८।४।५८)

---

(१) एकेनेति । ननु "भिदाभिदादिभ्योऽङ्" "अस्यतिवक्तिख्यातिभ्योऽङ्" इत्यादिष्वकारेण ग्रहणसम्भवात्कथमेकेनेत्युच्यत इति चेत् । न । तत्र प्रत्ययाप्रत्यययोः प्रत्ययस्यैव ग्रहणमितिपरिभाषया प्रत्ययस्यैवाङो ग्रहणं नतु प्रत्याहाररूपस्य । तस्याः प्रत्याख्यातत्वेऽपि व्याख्यानत इत्यादिना अङः प्रत्ययस्यैव ग्रहणात् । तत्र व्याख्यानं च प्रत्याहारग्रहणस्य फलाभावरूपम् । अथवा आदिरन्त्येनेतिसूत्रे अणुदित्सूत्रात्प्रत्ययपदानुवृत्त्या प्रत्ययबोधकशब्दः प्रत्याहाराप्रयोजक इत्यर्थकरणरूपम् । "सुप्तिङन्तं" इत्यादिषु न दोषः । तत्र तिङ्साहचर्यात्सुपः प्रत्याहारस्यैव ग्रहणात् । एवं सर्वत्र । "इङश्च" 'इङ् धार्योः' इत्यादिष्वपि न ङकारेण प्रत्याहारः । इकोझलीति कित्वविधानात् । धारिसाहचर्याच्च । एवं सर्वत्र । विस्तरस्तु पदमञ्जर्यादिषु द्रष्टव्यः ।

इत्येतदप्यनुस्वारान्तरतमं सकृदेव परसवर्णं विदधाति । न च रेफस्यानुस्वारान्तरतमः सवर्णोऽस्तीति न भविष्यति कुण्डं रथेन वनं रथेनेत्यत्र । अटां मध्ये विसर्जनीयजिह्वामूलीयोपध्मानीयानामप्युपदेशः कर्त्तव्यः । किं प्रयोजनम् । उरःकेण । उरःकेण । उरःपेण । उरःपेण । अत्राऽड्व्यवाय इति णत्वं यथा स्यादिति ।

## ल ण् ॥ ६ ॥

ल इत्येकं वर्णमुपदिश्य पूर्वांश्चान्ते णकारमितं करोति प्रत्याहारार्थम् । तस्य ग्रहणं भवति त्रिभिः । "अणुदित्सवर्णस्य चाप्रत्ययः" (अ०सू०१।१।६९) इत्यकारेण । "इण्कोः" (अ०सू०८।३।५७) इतीकारेण । "इको यणचि" (अ०सू०६।१।७७) इति यकारेण । इण्ग्रहणानि सर्वाणि परेण णकारेण, अण्ग्रहणानि तु पूर्वेण । "अणुदित्सवर्णस्य चाप्रत्ययः" (अ०सू०१।१।६९) इत्येतदेकमनेन । अथ किमर्थमच्ग्रहणमेवैतन्न क्रियते । नैवं शक्यम् । अन्तःस्थानामपि हि सवर्णानां ग्रहणमिष्यते । सँय्यन्ता, सँव्वत्सरः, यँल्लोकम्, तँल्लोकमित्यत्रानुस्वारस्यानुनासिके यचि परसवर्णे कृते तस्य यर्ग्रहणेन ग्रहणाद् द्विर्वचनं यथा स्यादिति । हकारादिष्वकार उच्चारणार्थो नानुबन्धः । लकारे त्वनुनासिकः प्रतिज्ञायते । तेन "उरण् रपरः" (अ०सू०१।१।५१) इत्यत्र प्रत्याहारग्रहणाल्लपरत्वमपि भवति ।

## ञ म ङ ण न म् ॥ ७ ॥

ञ म ङ ण न इत्येतान् वर्णानुपदिश्य पूर्वांश्चान्ते मकारमितं करोति प्रत्याहारार्थम् । तस्य ग्रहणं भवति त्रिभिः(१) । "पुमः खय्यम्परे" (अ०सू०८।३।६) इत्यकारेण । "हलो यमां यमि लोपः" (अ०सू०८।४।६४) इति यकारेण । "ङमो ह्रस्वादचि ङमुण् नित्यम्" (अ०सू०८।३।३२) इति ङकारेण । "ञमन्ताड्डः" इति ञकारेणापि ग्रहणमस्य दृश्यते(२) । केचित्तु सर्वाण्येतानि प्रत्याहारग्रहणानि ञकारेण भवन्त्विति मकारमनुबन्धं प्रत्याचक्षते । तथा तु सति "ङमो ह्रस्वादचि ङमुण् नित्यम्" (अ०सू०८।३।३२) इत्यत्रागमिनोर्ञ्भोरभावादागमाभावप्रतिपत्तौ प्रतिपत्तिगौरवं भवति ।

## झ भ ञ् ॥ ८ ॥

झ भ इत्येतौ वर्णावुपदिश्य पूर्वांश्चान्ते ञकारमितं करोति प्रत्याहारार्थम् । तस्य ग्रहणं भवत्येकेन, "अतो दीर्घो यञि" (अ०सू०७।३।१०१) इति यकारेण ।

## घ ढ ध ष् ॥ ९ ॥

घ ढ ध इत्येतान् वर्णानुपदिश्य पूर्वांश्चान्ते षकारमितं करोति प्रत्याहारार्थम् । तस्य ग्रहणं भवति द्वाभ्याम् । "एकाचो बशो भष् झषन्तस्य स्ध्वोः" (अ०सू०८।२।३७) इति झकारभकाराभ्याम् ।

## ज ब ग ड द श् ॥ १० ॥

ज ब ग ड द इत्येतान् वर्णानुपदिश्य पूर्वांश्चान्ते शकारमितं करोति प्रत्याहारार्थम् । तस्य ग्रहणं भवति षड्भिः । "भोभगोअघोअपूर्वस्य योऽशि" (अ०सू०८।३।१७) इति अकारेण । "हशि च" (अ०सू०६।१।११४) इति हकारेण । "नेड्वशि कृति" (अ०सू०७।२।८) इति वका-

(१) त्रिभिरिति । नन्वनुपदमेवोच्यते "ञमन्ताड्डः" ञकारेणापि ग्रहणमस्य दृश्यते इति तर्हि त्रिभिर्ग्रहणं कथं प्रोच्यते इतिचेत् । न, । अष्टाध्यायीगत त्रिप्रकारं ग्रहणमित्याभिप्रायं तत् । अत एव यमिर्ञमन्ताड्डित्यत्रापि दृश्यत इति ।

(२) "सृजिदृशोर्झल्यमकिति" इत्यत्र न प्रत्याहारस्यामूपदस्य ग्रहणम्, किन्त्वागमस्य । "साक्षाद्द्रष्टरि" इति निर्देशात् । अथवा "आदिरन्त्येनेत्यत्रानुवृत्तस्य 'अप्रत्यय' पदस्य ग्रन्थकारोक्तार्थवदाविधीयमानार्थकरणात् । अत्र 'अम्' पदं च विधीयमानमिति ।

ण। झलां जश् झशि" (अ०सू०८।४।५३) इति जकारझकाराभ्याम्। "एकाचो बशो भष् झषन्तस्य स्ध्वोः" (अ०सू०८।२।३७) इति षकारेण।

**ख फ छ ठ थ च ट त व्॥ ११॥**

ख फ छ ठ थ च ट त इत्येतान् वर्णानुपदिश्यान्ते वकारमितं करोति प्रत्याहारार्थम्। तस्य ग्रहणं भवत्येकेन "नश्छव्यप्रशान्" (अ०सू०८।३।७) इति छकारेण। खफग्रहणमुत्तरार्थम्।

**क प य्॥ १२॥**

क प इत्येतौ वर्णावुपदिश्य पूर्वांश्चान्ते यकारमितं करोति प्रत्याहारार्थम्। तस्य ग्रहणं भवति चतुर्भिः। "अनुस्वारस्य ययि परसवर्णः" (अ०सू०८।४।५८) इति यकारेण। "मय उञो वो वा" (अ०सू०८।३।३३) इति मकारेण। "झयो होऽन्यतरस्याम्" (अ०सू०८।४।६२) इति झकारेण। "पुमः खय्यम्परे" (अ०सू०८।३।६) इति खकारेण।

**श ष स र्॥ १३॥**

श ष स इत्येतान् वर्णानुपदिश्य पूर्वांश्चान्ते रेफमितं करोति प्रत्याहारार्थम्। तस्य ग्रहणं भवति पञ्चभिः(१)। यरो ऽनुनासिके ऽनुनासिको वा" (अ०सू०८।४।४५)इति यकारेण। "झरो झरि सवर्णे" (अ०सू०८।४।६५) इति झकारेण। "खरि च" (अ०सू०८।४।५५) इति खकारेण। "अभ्यासे चर्च" (अ०सू०८।४।५४) इति चकारेण। "शर्पूर्वाः खयः" (अ०सू०७।४।६१) इति शकारेण।

**ह ल्॥ १४॥**

ह इत्येकं वर्णमुपदिश्य पूर्वांश्चान्ते लकारमितं करोति प्रत्याहारार्थम्। तस्य ग्रहणं भवति षड्भिः। "अलोऽन्त्यात् पूर्व उपधा" (अ०सू०१।१।६५) इति अकारेण। "हलोऽनन्तराः संयोग" (अ०सू०१।१।७)इति हकारेण। "लोपो व्योर्वलि" (अ०सू०६।१।६६) इति वकारेण। "रलो व्युपधाद्धलादेः संश्च" (अ०सू०१।२।२६) इति रेफेण। "झलो झलि" (अ०सू०८।२।२६) इति झकारेण। शल इगुपधादनिटः क्सः" (अ०सू०३।१।४५) इति शकारेण। अथ किमर्थमुपदिष्टोऽपि हकारः पुनरुपदिश्यते?। कित्त्वविकल्पक्सेड्विधयो यथा स्युरिति। स्निहित्वा स्नेहित्वेत्यत्र "रलो व्युपधाद्धलादेः संश्च" (अ०सू०१।२।२६) इति कित्त्वं वा यथा स्यात्। लिहरलिक्षदिति "शल इगुपधादनिटः क्सः" (अ०सू०३।१।४५) इति क्सो यथा स्यात्। रुदिहि स्वपिहीति वलादिलक्षण इड्यथा स्यात्। अदाग्धाम्। अल्ग्रहणेषु च हकारस्य ग्रहणं यथा स्यात्। यद्येवं ह य व र डित्यत्र तर्हि किमर्थमुपदिश्यते। महाँहि सः, देवा हसन्तीत्यत्राड्ग्रहणेषु चाश्ग्रहणेषु च ग्रहणं यथा स्यात्। "हशि च" (अ०सू०६।१।११४) इति हकारस्य ग्रहणं यथा स्यात्। ब्राह्मणो हसति। "हशि च" (अ०सू०६।१।११४) इति उत्वं यथा स्यात।

एकस्मान् ङञणवटा द्वाभ्यां षस्त्रिभ्य एव कणमाः स्युः।
ज्ञेयौ चयौ चतुर्भ्यो रः पञ्चभ्यः शलौ षड्भ्यः॥ इति।

इति प्रत्याहाराः।

## अथ प्रथमाध्यायस्य प्रथमः पादः।

**(२)वृद्धिरादैच्॥ १॥**

वृद्धिशब्दः संज्ञात्वेन विधीयते प्रत्येकमादैचां वर्णानां सामान्येन तद्भावितानामतद्भावि-

(१) इरितान्धातूनामुपदेशसामर्थ्यात् "इरितोवा" इति न प्रत्याहारः। प्रियस्थिरादिसूत्रे वांरोति न प्रत्याहारः। भाष्यमानत्वात्पादिसाहचर्याच्च।

(२) त्रिपदमिदं सूत्रम। समासे समासान्तविधेरनित्यत्वकल्पनापत्ते। आदेच्छब्दादर्थवत्वादिभक्त्यु-

तानां च । तपरकरणमैजर्थं तादपि परस्तपर इति खट्वैडकादिषु त्रिमात्रचतुर्मात्रप्रसङ्गनिवृत्तये । आश्वलायनः । ऐतिकायनः । औपगवः । औपमन्यवः । शालीयो, मालीयः । वृद्धिप्रदेशाः "सिचि वृद्धिः परस्मैपदेषु" (अ०सू०७।२।१) इत्येवमादयः ।

## अदेङ् गुणः ॥ २ ॥

गुणशब्दः संज्ञात्वेन विधीयते प्रत्येकमदेङां वर्णानां सामान्येन तद्भावितानामतद्भावितानां च । तपरकरणं त्विह सर्वार्थम् । तरिता, चेता, स्तोता, पचति, जयति, अहं पचे । गुणप्रदेशा "मिदेर्गुण" (अ०सू०७।३।८२) इत्येवमादयः ।

## इको गुणवृद्धी ॥ ३ ॥

परिभाषेयं स्थानिनियमार्था । अनियमप्रसङ्गे नियमो विधीयते । वृद्धिगुणौ स्वसंज्ञया शिष्यमाणाविक एव स्थाने वेदितव्यौ(१) । वक्ष्यति "सार्वधातुकार्द्धधातुकयोः" (अ०सू० ७।३।८४) अङ्गस्य गुण इति । स इक एव स्थाने वेदितव्यः । तरति । नयति । भवति । वृद्धिः खल्वपि । अकार्षीत् । अहार्षीत् । अचैषीत् । अनैषीत् । अलावीत् । अस्तावीत । गुणवृद्धी स्वसंज्ञया विधीयेते तत्र इक इति एतदुपस्थितं द्रष्टव्यम् । किं कृतं भवति । द्वितीया षष्ठी प्रादुर्भाव्यते । मिदिमृजिपुगन्तलघूपधर्च्छिदृशिक्षिप्रक्षुद्रेष्वङ्गेनेग्विशेष्यते । जुसि सार्वधातुकादिगुणेष्विकाङ्गं विशेष्यते । मेद्यते । (२)अबिभयुः । इक इति किम् । आत्सन्ध्यक्षरव्यञ्जनानां मा भूत् । यानम् । ग्लायति । उम्भिता । पुनर्गुणवृद्धिग्रहणं स्वसंज्ञया विधाने नियमार्थम् । इह माभूत् । द्यौः । पन्थाः । सः । इममिति ।

## न धातुलोप आर्धधातुके ॥ ४ ॥

धातुः(३)तस्य लोपो यस्मिन्नार्धधातुके तदार्धधातुकंधातुलोपं तत्र ये गुणवृद्धी प्राप्नुतस्ते न भवतः । लोलुवः । पोपुवः । मरीमृजः । लोलूयादिभ्यो यङन्तेभ्यः पचाद्यचि विहिते "यङोचि च" (अ०सू०२।४।७४) इति यङो लुकि कृते तमेवाचमाश्रित्य ये गुणवृद्धी प्राप्ते तयोः प्रतिषेधः । धातुग्रहणं किम् ? । लूञ् । लविता । रेडसि । पर्ण नयः । अनुबन्धप्रत्ययलोपे मा भूत् । रिषहिंसार्थस्य विच्प्रत्ययलोप उदाहरणं रेडिति । आर्धधातुक इति किम् ? । त्रिधा बद्धो वृषभो रोरवीति । सार्वधातुके मा भूत् । इक इत्येव । अभाजि । रागः ।

## क्ङिति च ॥ ५ ॥

निमित्तसप्तम्येषा । क्ङिन्निमित्ते ये गुणवृद्धी(४) प्राप्नुतस्ते न भवतः । चितः । चितवान् । स्तुतः । स्तुतवान् । भिन्नः । भिन्नवान् । मृष्टः । मृष्टवान् । ङिति खल्वपि । चिनुतः ।

---

नपत्तौ "चो कु" इति प्राप्तं तच्च भत्वाद्बाध्यते । भत्वं च "अयस्मयादीनि च छन्दसि" इत्यनेन । छन्दस्त्व न छन्दोवत्सूत्राणि भवन्ति' इति वचनात् । उद्देश्यमननुद्दिश्य न विधेयमुदीरयेत् इति नियमस्य त्यागेन विधेयबोधकवृद्धिशब्दपूर्वप्रयोगस्तु मङ्गलार्थं । मङ्गलादीनि" इत्यादिवचनात् ।

(१) "भवत इति वेदितव्यम्" इति पाठ क्वचित् ।

(२) "गुणवृद्धी" इत्यादित "अबिभयु." इत्यन्त पाठ प्रायो नोपलभ्यते ।

(३) अस्मिन् सूत्रे धातुपदेन धात्वेकदेश स्वीक्रियते । कृत्स्नधातुलोपे तु गुणवृध्यो प्राप्तेरभाव एव तस्माद्धातुपदं धात्वेकदेशपरम् । तदाह—धात्वेकदेशो धातुरिति ।

(४) क्ङिन्निमित्ते ये गुणवृद्धी इति । अनेन गुणवृद्धिविशेषण क्ङिदादीतिदर्शितम् । ननु प्राधान्य न निषेधस्य विशेषणं योग्यं, गुणानाच परार्थत्वादिति न्यायादिति चेन्न । ईदृशेषु स्थलेष्वन्यन्यायस्य प्रवृत्तेः । सच-

गुण. कृतात्मसंस्कार प्रधानम्प्रतिपद्यते ।
प्रधानस्योपकारे हि तथा भूयसि वर्तते ।

अनया कारिकया स्पष्टीकृतो वेदितव्य ।

चिन्वन्ति । मृष्टः । मृजन्ति । गकारोऽप्यत्र चर्त्वभूतो निर्दिश्यते । "ग्लाजिस्थश्च क्स्नुः" । (अ०सू०३।२।१३९) जिष्णुः । भूष्णुः । इक इत्येव । कामयते । लैगवायनः । *मृजेरजादौ संक्रमे विभाषा वृद्धिरिष्यते* । संक्रमो नाम गुणवृद्धिप्रतिषेधविषयः । परिमृजन्ति । परिमार्जन्ति । परिमृजन्तु । परिमार्जन्तु । लघूपधगुणस्याप्यत्र प्रतिषेधः । अचिनवमसुनवमित्यादौ लकारस्य सत्यपि ङित्त्वे यासुटो ङिद्वचनं ज्ञापकं, ङिति यत्कार्यं तल्लकारे ङिति न भवतीति ।

## दीधीवेवीटाम् ॥ ६ ॥

दीधीवेव्योरिटश्च ये गुणवृद्धी प्राप्नुतस्ते न भवतः । आदीध्यनम् । आदीध्यकः । आवेव्यनम् । आवेव्यकः । इटः खल्वपि । श्वः कणिता, श्वो रणिता । वृद्धिरिटो न सम्भवतीति लघूपधगुणस्यात्र प्रतिषेधः ।

## हलोऽनन्तराः संयोगः ॥ ७ ॥

भिन्नजातीयैरज्भिरव्यवहिताः श्लिष्टोच्चारिता हलः संयोगसंज्ञा भवन्ति, समुदायः संज्ञी । जातौ चेदं बहुवचनं तेन द्वयोर्बहूनां च संयोगसंज्ञा सिद्धा भवति । अग्निरिति गनौ । अश्व इति शवौ । कर्ण इति रणौ । इन्द्रश्चन्द्रो मन्द्र इति नदराः । उष्ट्रो राष्ट्रं भ्राष्ट्रमिति षटराः । तिलान् स्त्र्यावपतीति नसतरयाः । नतसतरया वा । हल इति किम् । तितउच्छत्रम् । "संयोगान्तस्य लोप" ( अ०सू०८।२।२३) इति लोपः स्यात् । अनन्तरा इति किम् । पचति पनसम् । "स्कोः संयोगाद्योः" (अ०सू०८।२।२९) इति लोपः स्यात् । संयोगप्रदेशाः "संयोगान्तस्य लोप" (अ०सू०८।२।२९) इत्येवमादयः ।

## मुखनासिकावचनोऽनुनासिकः ॥ ८ ॥

मुखसहिता नासिका मुखनासिका, तया य उच्चार्यते वर्णः सो ऽनुनासिकसंज्ञो भवति । "आङोऽनुनासिकश्छन्दसि" । (अ०सू०६।१।१२६) अभ्रआँ अपः । गभीरआँ उग्रपुत्रे । चनआँ इन्द्रः(१) । मुखग्रहणं किम् । अनुस्वारस्यैव हि स्यात् । नासिकाग्रहणं किं कचटतपानां माभूत् । अनुनासिकप्रदेशाः । "आङोऽनुनासिकश्छन्दसि" (अ०सू०६।१।१२६) इत्येवमादयः।

## तुल्यास्यप्रयत्नं सवर्णम् ॥ ९ ॥

तुल्यशब्दः सदृशपर्यायः, आस्ये भवमास्यं ताल्वादिस्थानं, प्रयतनं प्रयत्नः स्पृष्टतादिर्वर्णगुणः । तुल्य आस्ये प्रयत्नो यस्य वर्णस्य येन वर्णेन सह स समानजातीयं प्रति सवर्णसंज्ञो भवति । चत्वार आभ्यन्तराः प्रयत्नाः सवर्णसंज्ञायामाश्रीयन्ते । स्पृष्टता, ईषत्स्पृष्टता, संवृतता, विवृतता चेति । 'अअअ' इति त्रयोऽकारा उदात्तानुदात्तस्वरिताः, प्रत्येकं सानुनासिका निरनुनासिकाश्च ह्रस्वदीर्घप्लुतभेदादष्टादशधा भिद्यन्ते । तथेवर्णः। तथोवर्णः। तथा ऋवर्णः । ऌवर्णस्य दीर्घा न सन्ति । तं द्वादशप्रभेदमाचक्षते । सन्ध्यक्षराणां ह्रस्वा न सन्ति तान्यपि द्वादशप्रभेदानि । अन्तःस्था द्विप्रभेदा रेफावर्जिता यवलाः सानुनासिका निरनुनासिकाश्च । रेफोष्मणां सवर्णा न सन्ति । वर्ग्यो वर्ग्येण सवर्णः । दण्डाग्रम् । खट्वाग्रम् । आस्यग्रहणं किं कटचतपानां भिन्नस्थानानां तुल्यप्रयत्नानां मा भूत् । किं च स्यात् । 'तर्प्ता' 'तर्प्तुम्' इत्यत्र "झरो झरि सवर्णे" (अ०सू०८।२।३९) इति पकारस्य तकारे लोपः स्यात् । प्रयत्नग्रहणं किम् । इचुयशानां तुल्यस्थानानां भिन्नप्रयत्नानां मा भूत् । किंच स्यात् । अरुश्च्योततीत्यत्र "झरो झरि सवर्णे" (अ०सू०८।२।३९) इति शकारस्य चकारे लोपः स्यात् । *ऋकारऌकारयोः सवर्णसंज्ञा वक्तव्या* । होतृ्ऌकारः । होतॄकारः। उभयोर्ऋवर्णस्य चान्तरतमः सवर्णो दीर्घो नास्तीति ऋकार एव दीर्घो भवति । सवर्णप्रदेशा "अकः सवर्णे दीर्घः" (अ०सू०६।१।१०१) इत्येवमादयः ।

(१) "अप" इति क्वचित्पाठः ।

## नाज्झलौ ॥ १० ॥

अच्च हल् च अज्झलौ, तुल्यास्यप्रयत्नावपि अज्झलौ परस्परं (१)सवर्णसंज्ञौ न भवतः । अवर्णहकारौ–दण्डहस्तः । इवर्णशकारौ–दधि शीतम् । सवर्णदीर्घत्वं न भवति । वैपाशो मत्स्यः । आनडुहं चर्म्मेति, "यस्येति च" ( अ०सू०६।४।१४८) इति लोपो न भवति ।

## ईदूदेद्द्विवचनं प्रगृह्यम् ॥ ११ ॥

ईत् ऊत् एत् इत्येवमन्तं द्विवचनं शब्दरूपं प्रगृह्यसंज्ञं भवति । अग्नी इति । वायू इति । माले इति । पचेते इति । पचेथे इति । ईदूदेदिति किम् । वृक्षावत्र । प्लक्षावत्र । द्विवचनमिति किम् । कुमार्यत्र । किशोर्यत्र । तपरकरणमसन्देहार्थम् । प्रगृह्यप्रदेशाः । "प्लुतप्रगृह्या अचि" (अ०सू०६।१।१२५) इत्येवमादयः । ईदादीनां प्रगृह्यत्वे मणीवादीनां प्रतिषेधो वक्तव्यः(२) ।

मणीवोष्ट्रस्य लम्बेते प्रियौ वत्सतरौ मम ।
दम्पतीव जम्पतीव रोदसीव ॥

## अदसो मात् ॥ १२ ॥

अदसः सम्बन्धी यो मकारस्तस्मात्पर ईदूदेतः प्रगृह्यसंज्ञा भवन्ति । अमी अत्र । अमी आसते । अमू अत्र । अमू आसते । एकारस्य नास्त्युदाहरणम् । अदस इति किम् । शम्यत्र । दाडिम्यत्र । मादिति किम् । अमुके ऽत्र ।

## शे ॥ १३ ॥

शे इत्येतत्प्रगृह्यसंज्ञं भवति । किमिदं शे इति । सुपामादेशश्छन्दसि । न युष्मे वाजबन्धवः । अस्मे इन्द्राबृहस्पती । युष्मे इति । अस्मे इति । त्वे रायः । मे रायः । त्वे इति । मे इति । छान्दसमेतदेवैकमुदाहरणम् । अस्मे इन्द्राबृहस्पती इति । तत्र तथा पाठात् । इतरत्तु लौकिकमनुकरणम्, युष्मे इति, अस्मे इति, त्वे इति, मे इति ।

## निपात एकाजनाङ् ॥ १४ ॥

एकश्चासावच्च एकाच्, निपातो य एकाच् आङ्वर्जितः स प्रगृह्यसंज्ञो भवति । अ अपेहि । इ इन्द्रं पश्य । उ उत्तिष्ठ । आ एवं नु मन्यसे । आ एवं किल तत् । निपात इति किम्, चकारात्र । एकाजिति किम्, प्रागग्नये वाचमीरय । अनाङिति किम्, आ उदकान्तात् ओदकान्तात् ।

ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः ।
एतमातं ङितं विद्याद्वाक्यस्मरणयोरङित् ॥

## ओत् ॥ १५ ॥

निपात इति वर्त्तते । तस्यौकारेण तदन्तविधिः । ओदन्तो यो निपातः स प्रगृह्यसंज्ञो भवति । आहो उताहो इति ।

## संबुद्धौ शाकल्यस्येतावनार्षे ॥ १६ ॥

ओदिति वर्त्तते । संबुद्धिनिमित्तो य ओकारः स शाकल्यस्याचार्यस्य मतेन प्रगृह्यसंज्ञो भवति इति शब्देऽनार्षे = अवैदिके परतः । वायो इति, वायविति । भानो इति, भानविति । सम्बुद्धाविति किम्, गवित्ययमाह । अत्रानुकरणयोर्भेदस्याविवक्षितत्वात् । असत्यर्थवत्त्वे

(१) अत्राज्झलौ केनापि सवर्णौ न भवत इति न वाक्यार्थः । तथा सति सञ्ज्ञा निर्विषया स्यात् । नापि अचामाज्भिः सावर्ण्यं निषिध्यते 'नाच्' इति दीर्घनिर्देशासङ्गतेः । नापि हला हल्भिः । पूर्वसवर्णनिर्देशासङ्गते । तस्मादचां हलां परस्परमित्येव वक्तव्यम् । तदेव वक्ति परस्परमिति ।

( २ ) मणीवेति । नेदं भाष्यकारवार्तिककारयोर्वचनम् । किन्तुमणीवादीनां निर्वाहः कर्तव्य इत्यर्थकम् । निर्वाहप्रकारश्च 'मणीवोष्ट्रस्य' इत्यत्रोपमानार्थकवाशब्दस्य प्रयोगः । 'रोदसीव' इत्यादौ छान्दसत्वान्निर्वाहः ।

*विभक्तिर्न भवति । शाकल्यग्रहणं विभाषार्थम् । इताविति किम्, वायोऽत्र । अनार्ष इति किम्, एला मा ब्रह्मबन्धवित्यब्रवीत् ।*

**उञः ॥ १७ ॥**

शाकल्यस्येताविति वर्त्तते । उञः प्रगृह्यसंज्ञा भवति इतौ शाकल्यस्याचार्यस्य मतेन ॥ शाकल्यस्येति विभाषार्थम् । उ इति । विति ॥

**ऊँ ॥ १८ ॥**

उञ इति वर्त्तते । उञ इतावनार्षे ऊँ इत्ययमादेशो भवति दीर्घोऽनुनासिकः शाकल्यस्य मतेन प्रगृह्यसंज्ञकश्च । शाकल्यस्य ग्रहणं विभाषार्थमिहाप्यनुवर्त्तते, तेन त्रीणि रूपाणि भवन्ति । उ इति, विति, ऊँ इति ॥

**ईदूतौ च सप्तम्यर्थे ॥ १९ ॥**

शाकल्यस्येतावनार्षे इति निवृत्तम् । ईदन्तमूदन्तं च शब्दरूपं सप्तम्यर्थे वर्त्तमानं प्रगृह्यसंज्ञं भवति । अध्यस्यां मामकी तनू । मामक्यां तन्वामिति प्राप्ते । मामक्यां, मामकी इति । तन्वां, तनू इति । सोमो गौरी अधिश्रितः । ईदूताविति किम्, प्रियः सूर्ये प्रियो अग्ना भवाति । अग्निशब्दात्परस्याः सप्तम्या डादेशः । सप्तमीग्रहणं किम्, धीती मती सुष्टुती ! धीत्या मत्या सुष्टुत्या इति प्राप्ते । अर्थग्रहणं किम्, वाप्यश्वो नद्यातिः । तपरकरणमसन्देहार्थम् ॥

ईदूतौ सप्तमीत्येव लुप्ते ऽर्थग्रहणाद्भवेत् ।
पूर्वस्य चेत्सवर्णोऽसावाडाम्भावः प्रसज्ज्यते ॥ १ ॥
वचनाद्यत्र दीर्घत्वं तत्रापि सरसी यदि ।
ज्ञापकं स्यात्तदन्तत्वे मा वा पूर्वपदस्य भूत् ॥ २ ॥

**दाधा घ्वदाप् ॥ २० ॥**

दारूपाश्चत्वारो धातवो धारूपौ च द्वौ दाब्दैपौ वर्जयित्वा घुसंज्ञका भवन्ति । डुदाञ्, प्रणिददाति । दाण् दाने, प्रणिदाता । दो, प्रणिद्यति । देङ्, प्रणिदयते । डुधाञ्, प्रणिदधाति । धेट्, प्रणिधयति वत्सो मातरम् । अदाबिति किम् । दाप् लवने, दातं बर्हिः । दैप् शोधने, अवदातं मुखम् । घुप्रदेशाः—"घुमास्थागापाजहातिसां हलि" (अ०सू०६।४।६६) इत्येवमादयः(१) ॥

**आद्यन्तवदेकस्मिन् ॥ २१ ॥**

असहायस्य आद्यन्तोपदिष्टानि कार्याणि न सिद्ध्यन्तीत्ययमतिदेश आरभ्यते । सप्तम्यर्थे वतिः । आदाविव अन्त इव एकस्मिन्नपि कार्यं भवति । यथा कर्त्तव्यमित्यत्र प्रत्ययाद्युदात्तत्वं भवति एवमौपगवमित्यत्रापि यथा स्यात् । यथा वृक्षाभ्यामित्यत्रातोऽङ्गस्य दीर्घत्वमेवमाभ्यामित्यत्रापि यथा स्यात् । एकस्मिन्निति किम्, सभासन्नयने भवः साभासन्नयनः । आकारमाश्रित्य वृद्धसंज्ञा न भवति ॥

**तरप्तमपौ घः ॥ २२ ॥**

तरप् तमप् इत्येतौ प्रत्ययौ घसंज्ञौ भवतः । कुमारितरा । कुमारितमा । ब्राह्मणितरा । ब्राह्मणितमा । घप्रदेशा "घरूपकल्पचेलड्ब्रुवगोत्रमतहतेषु ङ्योऽनेकाचो ह्रस्व" (अ०सू०६।३।४३) इत्येवमादयः ॥

**बहुगणवतुडति संख्या ॥ २३ ॥**

(१) "नेर्गदनपतपदघुमास्यतीत्येवमादयः" इति पाठः क्वचित्क ।

बहुगणवतुडति(१) इत्येते संख्यासंज्ञा भवन्ति । बहुकृत्वः । बहुधा । बहुकः । बहुशः । गणकृत्वः । गणधा । गणकः । गणशः । तावत्कृत्वः । तावद्धा । तावच्छः । कतिकृत्वः । कतिधा । कतिकः । कतिशः । बहुगणशब्दयोर्वैपुल्ये सङ्घे च वर्तमानयोरिह ग्रहणं नास्ति । संख्यावाचिनोरेव । भूर्यादीनां निवृत्त्यर्थं संख्या संज्ञा विधीयते ॥ अर्धपूर्वपदश्च पूरणप्रत्ययान्तः सख्यासंज्ञो भवतीति वक्तव्यं समासकन्विध्यर्थम् ॥ १ ॥ अर्धपञ्चमशूर्पः । अर्द्धः पञ्चमो येषामिति बहुव्रीहौ कृते ऽर्द्धपञ्चमैः शूर्पैः क्रीतः । तद्धितार्थेति समासः । तत्र "दिक्संख्ये संज्ञायाम्" (अ०सू०२।१।५०) इत्यनुवृत्तेस्ततः संख्यापूर्वस्य द्विगुसंज्ञायां "शूर्पादञन्यतरस्याम्" (अ०सू०५।१।२६) इत्यञ् ठञ्च । "अर्द्धयर्द्धपूर्वद्विगोः" (अ०सू०५।१।२८) इति लुक् । अर्द्धपञ्चमकः । संख्याप्रदेशाः—"संख्या वंश्येन" (अ०सू०२।१।१९)इत्येवमादयः(२) ।

## ष्णान्ता षट् ॥ २४ ॥

स्त्रीलिङ्गनिर्देशात् संख्येति सम्बध्यते । षकारान्ता नकारान्ता च या संख्या सा षट्संज्ञा भवति । षकारान्तास्तावत् षट् तिष्ठन्ति । षट् पश्य । नकारान्ताः । पञ्च । सप्त । नव । दश । अन्तग्रहणमौपदेशिकार्थम् । तेनेह न भवति । शतानि । सहस्राणि । अष्टानामित्यत्र नुड् भवति । षट्प्रदेशाः "षड्भ्यो लुक्" (आ०सू०७।१।२२) इत्येवमादयः ॥

## डति च ॥ २५ ॥

डत्यन्ता या संख्या सा षट्संज्ञा भवति । कति तिष्ठन्ति । कति पश्य ॥

## क्तक्तवतू निष्ठा ॥ २६ ॥

क्तश्च क्तवतुश्च क्तक्तवतू प्रत्ययौ निष्ठासंज्ञौ भवतः। कृतः । कृतवान् । भुक्तः । भुक्तवान् । ककारः कित्कार्यार्थः । उकार उगित्कार्यार्थः । निष्ठाप्रदेशाः "श्वीदितो निष्ठायाम्" (अ०सू० ७।२।१४) इत्येवमादयः ॥

## सर्वादीनि सर्वनामानि ॥ २७ ॥

सर्वशब्द आदिर्येषां तानीमानि सर्वादीनि सर्वनामसंज्ञानि भवन्ति । सर्वः, सर्वौ, सर्वस्मै, सर्वस्मात्, सर्वेषाम्, सर्वस्मिन्, सर्वकः, । विश्वः, विश्वौ, विश्वे, विश्वस्मै, विश्वस्मात्, विश्वेषाम्, विश्वस्मिन्, विश्वः । उभ, उभय । उभशब्दस्य सर्वनामत्वे प्रयोजनं "सर्वनाम्नस्तृतीया च" (अ०सू०२।३।२७) इति । उभय, उभयस्मै, उभयस्मात्, उभयेषाम्, उभयस्मिन् । डतर । डतम । कतर, कतम, कतरस्मै, कतमस्मै । इतर, अन्य, अन्यतर । इतरस्मै, अन्यस्मै, अन्यतरस्मै । त्वशब्दोऽन्यवाची, स्वरभेदाद् द्विःपठितः । एक उदात्तो द्वितीयोऽनुदात्तः । केचित् तकारान्तमेकं पठन्ति । त्वत्वदिति द्वावपि चानुदात्ताविति स्मरन्ति । नेम, नेमस्मै । वक्ष्यमाणेन जसि विभाषा भवति । नेमे, नेमाः, इति । समः, समस्मै । कथं "यथासंख्यमनुदेशः समानाम्" (अ०सू०१।३।१०) "समे देशे यजेत" इति । समस्य सर्वशब्दपर्यायस्य सर्वनामसंज्ञेष्यते न सर्वत्र । सिम, सिमस्मै । पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम् । स्वमज्ञातिधनाख्यायाम् । अन्तरं बहिर्योगोपसंव्यानयोः । त्यद् । तद् । यद् । एतद् । इदम् । अदस् । एक । द्वि । युष्मद् । अस्मद् । भवतु । किम् । सर्वादिः ॥ सर्व नामप्रदेशाः—"सर्वनाम्नः स्मै" (आ०सू०७।१।१४) इत्येवमादयः ॥

## विभाषा दिक्समासे बहुव्रीहौ ॥ २८ ॥

---

(१) डति इत्यते संख्यासंज्ञा भवन्तीति । यद्यपत्र 'वतुडती' इति प्रत्यययोर्ग्रहणात 'संज्ञाविधौ प्रत्ययग्रहणं' इत्यनया परिभाषया तदन्तग्रहणाप्रसक्त्यात्र तदन्तयोरेव ग्रहणम् । केवलयो प्रत्यययो संज्ञाविधाने प्रयोजनं नास्ति, इति ।

(२) "संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्"-इत्येवमादय । इति पाठः क्वचित् ।

"न बहुव्रीहौ" (अ०सू०१।१।२९) इति प्रतिषेधं वक्ष्यति तस्मिन्नित्ये प्रतिषेधे प्राप्ते विभाषेयमारभ्यते । दिशां समासो दिक्समासो दिगुपदिष्टे समासे बहुव्रीहौ विभाषा सर्वादीनि सर्वनामसंज्ञानि भवन्ति । उत्तरपूर्वस्यै, उत्तरपूर्वायै । दक्षिणपूर्वस्यै, दक्षिणपूर्वायै, । दिग्ग्रहणं किम्, "न बहुव्रीहौ" (अ०सू०१।१।२९) इति प्रतिषेधं वक्ष्यति तत्र न ज्ञायते क्व विभाषा क्व प्रतिषेध इति । दिग्ग्रहणे पुनः क्रियमाणे ज्ञायते दिगुपदिष्टसमासे विभाषाऽन्यत्र प्रतिषेध इति । समासग्रहणं किम्, समास एव यो बहुव्रीहिस्तत्र विभाषा यथा स्यात् । बहुव्रीहिवद्भावेन यो बहुव्रीहिस्तत्र मा भूत्, दक्षिणदक्षिणस्यै देहि । बहुव्रीहाविति किम्, द्वन्द्वे विभाषा मा भूत्, दक्षिणोत्तरपूर्वाणामिति । "द्वन्द्वे च" (अ०सू०१।१।३१) इति नित्यं प्रतिषेधो भवति ॥

## न बहुव्रीहौ ॥ २९ ॥

सर्वनामसंज्ञायां तदन्तविधेरभ्युपगमाद् बहुव्रीहेरपि सर्वाद्यन्तस्य संज्ञास्यादिति प्रतिषेध आरभ्यते । बहुव्रीहौ समासे सर्वादीनि सर्वनामसंज्ञानि न भवन्ति । प्रियविश्वाय, प्रियोभयाय, द्व्यन्याय, त्र्यन्याय । इह च त्वत्कपितृको मत्कपितृक इत्यकच् न भवति । बहुव्रीहाविति वर्त्तमाने पुनर्बहुव्रीहिग्रहणं भूतपूर्वमात्रेऽपि प्रतिषेधो यथा स्यात् । वस्त्रान्तरा. वसनान्तरा इति ॥

## तृतीयासमासे ॥ ३० ॥

तृतीयासमासे सर्वादीनि सर्वनामसंज्ञानि न भवन्ति । मासपूर्वाय, संवत्सरपूर्वाय, द्व्यहपूर्वाय, त्र्यहपूर्वाय । समास इति वर्त्तमाने पुनः समासग्रहणं तृतीयासमासार्थवाक्येऽपि प्रतिषेधो यथा स्यात् । मासेन पूर्वाय । "पूर्वसदृशसमोनार्थ" (अ०सू०२।१।३१) इति तृतीयासमासं प्रतिपदं वक्ष्यति तस्येदं ग्रहणं न यस्य कस्य चित्तृतीयासमासस्य "कर्तृकरणे कृता बहुलम्" (अ०सू०२।१।३२) इति । त्वयका कृतम्, मयका कृतम् ।

## द्वन्द्वे च ॥ ३१ ॥

द्वन्द्वे च समासे सर्वादीनि सर्वनामसंज्ञानि न भवन्ति । पूर्वापराणाम्, कतरकतमानाम् ।

## विभाषा जसि ॥ ३२ ॥

पूर्वेण नित्ये प्रतिषेधे प्राप्ते जसि विभाषाऽऽरभ्यते । द्वन्द्वे समासे जसि विभाषा सर्वादीनि सर्वनामसंज्ञानि न भवन्ति । कतरकतमे, कतरकतमाः । जसः कार्यं प्रति विभाषाऽकज् हि न भवति, कतरकतमकाः ।

## प्रथमचरमतयाल्पार्द्धकतिपयनेमाश्च ॥ ३३ ॥

विभाषाजसीति वर्त्तते । द्वन्द्व इति निवृत्तम् । प्रथम, चरम, तय, अल्प, अर्द्ध, कतिपय. नेम, इत्येते जसि विभाषा सर्वनामसंज्ञा भवन्ति । प्रथमे, प्रथमाः चरमे, चरमाः । द्वितये. द्वितयाः । अल्पे, अल्पाः । अर्धे, अर्धाः । कतिपये, कतिपयाः । नेमे, नेमाः । तय इति तयप्प्रत्ययः । शिष्टानि प्रातिपदिकानि । तत्र नेम इति सर्वादिषु पठ्यते तस्य प्राप्ते विभाषा, अन्येषामप्राप्ते । उभयशब्दस्य तयप्प्रत्ययान्तस्य गणे पाठान्नित्या सर्वनामसंज्ञा, इहापि जस्कार्यं प्रति विभाषा । काकचोर्यथायोगं वृत्तिः ।

## पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम् ॥ ३४ ॥

पूर्व पर अवर दक्षिण उत्तर अपर अधर इत्येतेषां गणे पाठात्पूर्वेण नित्यायां सर्वनामसंज्ञायां प्राप्तायां जसि विभाषाऽऽरभ्यते । पूर्वादीनि विभाषा जसि सर्वनामसंज्ञानि भवन्ति व्यवस्थायामसंज्ञायाम् । स्वाभिधेयापेक्षावधिनियमो व्यवस्था(१) । पूर्वे पूर्वाः । परे पराः ।

(१) अत्र स्थापितः पाठो योग्यः । स्वाभिधेयापेक्षोऽवधीतिपाठः कुत्रचिदुपलभ्यते । चासमञ्जस इति कृत्वा परित्यक्तः ।

[redacted]

अवरे, अवराः । दक्षिणे, दक्षिणाः । उत्तरे, उत्तराः । अपरे, अपराः । अधरे, अधराः । व्यवस्थायामिति किम्, दक्षिणा इमे गाथकाः, प्रवीणा इत्यर्थः । असंज्ञायामिति किम्, उत्तराः कुरवः । सत्यामेव व्यवस्थायामियं तेषां संज्ञा ।

## स्वमज्ञातिधनाख्यायाम् ॥ ३५ ॥

अत्रापि नित्या सर्वनामसंज्ञा प्राप्ता जसि विभाष्यते । स्वमित्येतच्छब्दरूपं जसि विभाषा सर्वनामसंज्ञं भवति न चेज्ज्ञातिधनयोः संज्ञारूपेण वर्तते । स्वे पुत्राः, स्वाः पुत्राः । स्वे गावः, स्वा गावः । आत्मीया इत्यर्थः । ज्ञातिप्रतिषेधः किम्,

(१)धूमायन्त इवाश्लिष्टाः प्रज्वलन्तीव संहताः ।
उल्मुकानीव मे ऽमी स्वा ज्ञातयो भरतर्षभ ॥

अधनाख्यायामिति किम्, प्रभूता स्वा न दीयन्ते, प्रभूताः स्वा न भुज्यन्ते । प्रभूतानि धनानीत्यर्थः ।

## अन्तरं बहिर्योगोपसंव्यानयोः ॥ ३६ ॥

अत्रापि पूर्वेण नित्या सर्वनामसंज्ञा प्राप्ता सा जसि विभाष्यते । अन्तरमित्येतच्छब्दरूपं विभाषा जसि सर्वनामसंज्ञं भवति बहिर्योग उपसंव्याने च गम्यमाने । अन्तरे गृहाः, अन्तरा गृहाः । नगरबाह्याश्चाण्डालादिगृहा उच्यन्ते । अन्तरे शाटकाः, अन्तरा शाटकाः । उपसंव्यानं परिधानीयमुच्यते, न प्रावरणीयम् । बहिर्योगोपसंव्यानयोरिति किम्, अनयोर्ग्रामयोरन्तरे तापसः प्रतिवसति, तस्मिन्नन्तरे शीतान्युदकानि । मध्यप्रदेशवचनो ऽन्तरशब्दः । गणसूत्रस्य चेदं प्रत्युदाहरणम् । *अपुरीति च वक्तव्यम्* ॥ अन्तरायां पुरि वसति । *विभाषाप्रकरणे तीयस्य वा ङित्सु सर्वनामसंज्ञेत्युपसंख्यानम्* ॥ द्वितीयाय, द्वितीयस्मै । तृतीयाय, तृतीयस्मै ।

## स्वरादिनिपातमव्ययम् ॥ ३७ ॥

स्वरादीनि शब्दरूपाणि निपाताश्चाव्ययसंज्ञानि भवन्ति । स्वर् । अन्तर् । प्रातर् । एते ऽन्तोदात्ताः पठ्यन्ते । पुनर् आद्युदात्तः । सनुतर् उच्चैस् । नीचैस् । शनैस् । ऋधक् । आरात् । ऋते । युगपत् । पृथक् । एते ऽपि सनुतर्प्रभृतयो ऽन्तोदात्ताः पठ्यन्ते । ह्यस् । श्वस् । दिवा । रात्रौ । सायम् । चिरम् । मनाक् । ईषत् । जोषम् । तूष्णीम् । बहिस् । आविस् । अवस् । समया । निकषा । स्वयम् । मृषा । नक्तम् । नञ् । हेतौ । अद्धा । इद्धा । सामि । एते ऽपि ह्यस्प्रभृतयो ऽन्तोदात्ताः पठ्यन्ते । वत् । वदन्तमव्ययसंज्ञं भवति । ब्राह्मणवत् । क्षत्रियवत् । सन् । सनात् । सनत् । तिरस् । एते आद्युदात्ताः पठ्यन्ते । अन्तरा अयमन्तोदात्तः । अन्तरेण । ज्योक् । कम् । शम् । सना । सहसा । विना । नाना । स्वस्ति । स्वधा । अलम् । वषट् । अन्यत् । अस्ति । उपांशु । क्षमा । विहायसा । दोषा । मुधा । मिथ्या । क्त्वातोसुन्कसुनः, कृन्मकारान्तः, सन्ध्यक्षरान्तो ऽव्ययीभावश्च । पुरा । मिथो । मिथस् । प्रबाहुकम् । आर्यहलम् । अभीक्ष्णम् । साकम् । सार्द्धम् । समम् । नमस् । हिरुक् । तसिलादिस्तद्धित एधाच्पर्यन्तः । शस्तसी । कृत्वसुच् । सुच् । आस्थालौ । च्व्यर्थाश्च । अम् । आम् । प्रतान् । प्रशान् । स्वरादिः । निपाता वक्ष्यन्ते । "प्राग्रीश्वरान्निपाताः" (अ०सू०१।४।५६) इति । च । वा । ह । अह । एव । एवमित्यादयः । अव्ययप्रदेशा "अव्ययादाप्सुपः" (अ०सू०२।४।८२) इत्येवमादयः ।

(२)सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु ।

---

(१) धूमायन्त इति । यथोल्मुकान्यश्लिष्टानि-असंहतानि धूमायन्ते संहतानि तु प्रज्वलन्ति तद्वत् ज्ञातयो ऽपीत्यर्थः । स्वशब्दस्यानेकार्थत्वात्प्रकृतार्थद्योतनाय ज्ञातिशब्दस्य प्रयोगः ।

(२) सदृशमिति । आथर्वणी श्रुतिरेषा प्रणवविद्याविषयिका । अव्ययीभावस्य लिङ्गविशेषयोगे

वचनेषु च सर्वेषु यन्न व्येति तदव्ययम् ॥

**तद्धितश्चासर्वविभक्तिः ॥ ३८ ॥**

तद्धितान्तः शब्दोऽसर्वविभक्तिरव्ययसंज्ञो भवति। यस्माद्य सर्वविभक्तेरुत्पत्तिः सोऽसर्वविभक्तिः। ततः, यतः, तत्र, यत्र, तदा, यदा, सर्वदा, सदा। तद्धित इति किम्? एकः, द्वौ, बहवः। असर्वविभक्तिरिति किम्, औपगवः, औपगवौ, औपगवाः।

**कृन्मेजन्तः ॥ ३९ ॥**

कृद्यो मकारान्त एजन्तश्च तदन्तं शब्दरूपमव्ययसंज्ञं भवति। स्वादुङ्कारं भुङ्क्ते, संपन्नङ्कारं भुङ्क्ते, लवणङ्कारं भुङ्क्ते। एजन्तः। वक्षे रायः, ता वामेषे रथानाम्, क्रत्वे दक्षाय जीवसे, ज्योक्च सूर्यं दृशे। वक्षे इति वचे "तुमर्थे सेसेन्" (अ०सू०३।४।९) इति सेप्रत्यये कुत्वे षत्वे च कृते रूपम्। एषे इति इणः से प्रत्यये गुणे षत्वे च कृते रूपम्। जीवसे इति जीवेरसे प्रत्यये रूपम्। दृशे इति दृशेः केन्प्रत्ययो निपात्यते "दृशे विख्ये च" (अ०सू०३।४।११)इति। अन्तग्रहणमौपदेशिकप्रतिपत्त्यर्थम्। इह मा भूत्। आधये, चिकीर्षवे, कुम्भकारेभ्य इति।

**क्त्वातोसुन्कसुनः ॥ ४० ॥**

क्त्वा तोसुन् कसुन् इत्येवमन्तं शब्दरूपमव्ययसंज्ञं भवति। कृत्वा, हत्वा। तोसुन्। पुरा सूर्यस्योदेतोराधेयः, पुरा वत्सानामपाकर्तोः। "भावलक्षणे स्थेण्कृञ्वदि" (अ०सू०३।४।१६) इति इणः कञश्च तोसुन्प्रत्ययः। कसुन् "सृपितृदोः कसुन्" (अ०सू०३।४।१७)। पुरा क्रूरस्य विसृपो विरप्शिन्, पुरा जर्तृभ्य आतृदः।

**अव्ययीभावश्च ॥ ४१ ॥**

अव्ययीभावसमासोऽव्ययसंज्ञो भवति। किं प्रयोजनम्। लुङ्मुखस्वरोपचाराः। लुक्। उपाग्नि, प्रत्यग्नि शलभाः पतन्ति। मुखस्वर, उपाग्निमुखः, प्रत्यग्निमुखः। "मुखं स्वाङ्गम्" (अ०सू०६।२।१६७) इत्युत्तरपदान्तोदात्तत्वं प्राप्तं, "नाव्ययदिक्छब्द" (अ०सू०६।२।१६८) इति प्रतिषिध्यते। तस्मिन् प्रतिषिद्धे पूर्वपदप्रकृतिस्वर एव भवति। उपचार, उपपयःकारः, उपपयः कामः। विसर्जनीयस्थानिकस्य सकारस्य उपचार इति संज्ञा। तत्राऽव्ययीभावस्याव्ययत्वे "अतः कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्य" (अ०सू०८।३।४६) इति पर्युदासः सिद्धो भवति। सर्वमिदं काण्डं स्वरादावपि पठ्यते। पुनर्वचनमनित्यत्वज्ञापनार्थम्। तेनायं कार्यनियमः सिद्धो भवति। इह च पुरा सूर्यस्योदेतोराधेयः, पुराक्रूरस्य विसृप इति "न लोकाव्ययनिष्ठा" (अ०सू०२।३।६९) इति षष्ठीप्रतिषेधो न भवति।

**शि सर्वनामस्थानम् ॥ ४२ ॥**

शि इत्येतत्सर्वनामस्थानसंज्ञं भवति। किमिदं शि इति? जश्शसोः शिरादेशः। कुण्डानि तिष्ठन्ति, कुण्डानि पश्य, दधीनि, मधूनि, त्रपूणि, जतूनि। सर्वनामस्थानप्रदेशाः "सर्वनामस्थाने चासंबुद्धौ" (अ०सू०६।४।८) इत्येवमादयः।

**सुडनपुंसकस्य ॥ ४३ ॥**

सुडिति पञ्च वचनानि सर्वनामस्थानसंज्ञानि भवन्ति नपुंसकादन्यत्र। नपुंसके न विधिर्न प्रतिषेधस्तेन जसंशे सर्वनामस्थानसंज्ञा पूर्वेण भवत्येव। राजा, राजानौ, राजानः, राजानम्, राजानौ। सुडिति किम्, राज्ञः पश्य। अनपुंसकस्येति किम्, सामनी, वेमनी।

**न वेति विभाषा ॥ ४४ ॥**

नेति प्रतिषेधो वेति विकल्पस्तयोः प्रतिषेधविकल्पयोर्विभाषेति संज्ञा भवति। इतिकर-

ऽपि वचनादव्ययत्वम्। यन्नव्येतीति। यत्-यस्मात् नव्येति-सत्त्वधर्मान्न गृह्णाति, तत्-तस्मात् अव्ययमिति। अथवा यच्छब्दस्य रूपं प्रथमान्तम्। यन्नव्येति तदव्ययमिति।

णोऽर्थनिर्देशार्थः । विभाषाप्रदेशेषु प्रतिषेधविकल्पावुपतिष्ठेते । तत्र प्रतिषेधेन समीकृते विषये पश्चाद्विकल्पः प्रवर्त्तते । उभयत्र विभाषाः प्रयोजयन्ति । "विभाषा श्वेः" (अ०सू०६।१।३०) । शुशाव, शिश्वाय, शुशुवतुः, शिश्वियतुः । विभाषाप्रदेशाः । "विभाषा श्वेः" (अ०सू०६।१।३०) इत्येवमादयः ।

### इग्यणः संप्रसारणम् ॥ ४५ ॥

इग्यो यणः स्थाने भूतो भावी वा तस्य संप्रसारणमित्येषा संज्ञा भवति । यज्, इष्टम् । वप्, उप्तम् । ग्रह, गृहीतम् । केचिदुभयथा सूत्रमिदं व्याचक्षते । वाक्यार्थः संज्ञी वर्णश्चेति । इग्यण इति यो वाक्यार्थः स्थान्यादेशसम्बन्धलक्षणः स संप्रसारणसंज्ञो भवति, यणस्थानिक इग्वर्णः स संप्रसारणसंज्ञो भवतीति । तत्र विधौ वाक्यार्थ उपतिष्ठते । "ष्यङः संप्रसारणं" (अ०सू०६।१।१३) "वसोः संप्रसारणम्" (अ०सू०६।४।१३१) इति । अनुवादे वर्णः । "संप्रसारणाच्च" (अ०सू०६।१।१०८) इति । संख्यातानुदेशादिह न भवति, अदुहितरामिति । (१)संप्रसारणप्रदेशाः । "वसोः संप्रसारणम्" (अ०सू०६।४।१३१) इत्येवमादयः ।

### आद्यन्तौ टकितौ ॥ ४६ ॥

आदिष्टिद्भवति अन्तः किद्भवति षष्ठीनिर्दिष्टस्य । लविता, मुण्डो भीषयते । टित्प्रदेशाः– "आर्धधातुकस्येड्वलादेः" (अ०सू०७।२।३५) इत्येवमादयः । कित्प्रदेशाः "भियो हेतुभये षुक्" (अ०सू०७।३।४०) इत्येवमादयः ।

### मिदचोऽन्त्यात्परः ॥ ४७ ॥

अच इति निर्धारणे षष्ठी । जातौ चैदमेकवचनम् । अचां सन्निविष्टानामन्त्यादचः परो मिद्भवति स्थानेयोगप्रत्ययपरत्वस्यायमपवादः । विरुणद्धि, मुञ्चति, पयांसि । मित्प्रदेशाः । "रुधादिभ्यः श्नम्" (अ०सू०३।१।७८) इत्येवमादयः । *मस्जेरन्त्यात्पूर्वं नुममिच्छन्त्यनुषङ्गसंयोगादिलोपार्थम्* । मग्नः, मग्नवान्, मङ्क्ता, मङ्क्तुम् ।

### एच इग्घ्रस्वादेशे ॥ ४८ ॥

एचो ह्रस्वादेशे कर्त्तव्य इगेव ह्रस्वो भवति नान्यः । रै अतिरि । नौ अतिनु । गो उपगु । एच इति किम्, अतिखट्वः, अतिमालः । ह्रस्वादेश इति किम्, दे३वदत्त, देवद३त्त ।

### षष्ठी स्थानेयोगा ॥ ४९ ॥

परिभाषेयं योगनियमार्था । इह शास्त्रे या षष्ठी अनियतयोगा श्रूयते सा स्थाने योगनिमित्तभूते सति प्रतिपत्तव्या । स्थानशब्दश्च प्रसङ्गवाची । यथा दर्भाणां स्थाने शरैः प्रस्तरितव्यमिति दर्भाणां प्रसङ्ग इति गम्यते । एवमिहापि अस्तेः स्थाने प्रसङ्गे भूर्भवति, भविता, भवितुम्, भवितव्यम् । ब्रुवः प्रसङ्गे वचिर्भवति । वक्ता, वक्तुम्, वक्तव्यम् । प्रसङ्गे सम्बन्धस्य निमित्तभूते ब्रुव इति षष्ठी । बहवो हि षष्ठ्यर्थाः स्वस्वाम्यनन्तरसमीपसमूहविकारावयवाद्यास्तत्र यावन्तः शब्दे संभवन्ति तेषु सर्वेषु प्राप्तेषु नियमः क्रियते, "षष्ठी स्थानेयोगा" (अ०सू०१।१।४९) इति, स्थाने योगोऽस्या इति व्यधिकरणो बहुव्रीहिः । अत एव निपातनाच्च सप्तम्या अलुक् ।

### स्थानेऽन्तरतमः ॥ ५० ॥

स्थाने प्राप्यमाणानामन्तरतम(२) आदेशो भवति सदृशतमः । कुतश्च शब्दस्यान्तर्यम् ।

---

(१) अत्रायं पाठ क्वचिदुपलभ्यते–"धुभ्यामित्यत्र दिवउदेति तपरकरणाद्दीर्घो न" इति ।

(२) अत्र पक्षद्वयं प्राप्नोति तत्र विधिपक्षो न संभवति । तथाहि–स्वतन्त्रविधिपक्षे दधि, मधु, अत्राप्यादेशः प्राप्नोति । अत्रान्यादेशाविधानात्स एव प्राप्नोति । भवतु न दोष इतिचेन्न तस्याप्यन्य तस्याप्यन्य इति रीत्याऽनवस्थापातात् । तस्मात्परिभाषापक्ष एव श्रेयान् । स च यत्र स्थानषष्ठी तत्रोपतिष्ठते विधीनामेकवाक्यता च । तदा च विधानकाल एव प्राप्यमाणानामन्तरतम आदेश इत्यर्थो भविष्यति, तदाह—प्राप्यमाणेति ।

